कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक

हस्तलिखित संग्रह

दाखल क्र. M2371-ख विषय धर्मशास्त्र

नाव धर्मशास्त्र ग्रंथ

लेखक/लिपीकार —

पृठ — काळ शके 1795 पूर्ण/अपूर्ण

श्रीगणेशायनमः ॥ ॥अथशांतिमयूखः प्रारभ्यते॥ ॥महोमयमुदाराभंलोकत्रयनमस्कृतम् ॥ तमहंभास्करंवंदेसतांसर्वार्थसिद्धि
दं ॥ १॥ जज्ञेपितामहतनोःखलुकश्यपोयस्तस्मादजायतमुनिस्तुविभांडकाख्यः ॥ तंपुत्रिणांधुरमरोपयदृष्यशृंगस्तस्यान्वयेप्यजनिशृंगिवरा
भिधानः ॥ २॥ तस्मिन्वंशेमहतिविततेसेंगराख्येनृपाणांराजाकर्णःसमजनियथासागरेशीतरश्मिः॥ कीर्त्यायस्यप्रथिततरयाश्रोत्रजातेऽभि
पूर्णेकर्णस्यापिप्रविततकथानावकाशंलभंते ॥ ३॥ विशोकाख्यदेवस्ततस्तत्सुतोभूद्विशोकीकृतायेनसर्वाधरित्री ॥ ततोप्यासराजास्तशत्रु
स्ततोभूद्वयाख्योरयेणैवसर्वाहितघ्नः ॥ ४॥ बभूवाथवैराटराजस्ततोभून्नृपोमेदिनीवल्लभोवीढराजः॥ नरब्रह्मदेवस्ततोमन्[illegible]देवस्ततोभू
न्नृपश्चंद्रपालाभिधानः॥ ५ ॥शिवगणाख्यनृपःसमजन्यथोशिवगणाख्यपुरंप्रचकारयः॥ शिवगणेनसमःसकलैर्गुणैःशि[illegible]शिवप्रथ-
मोगणनास्कयः॥ ६॥ रोलिचंद्रइतितत्तनयोभूत्कर्मसेननृपतिस्तमथानु॥ लोकपोनरहरिर्नृपराजोरामचंद्रइतितत्तनुजातः॥ ७॥ यशोदेव
स्ततोजातस्ताराचंद्रनृपस्ततः ॥ चक्रसेनस्ततोराजाराजसिंहनृपोयतः॥ ८ ॥ ततोप्यभूद्भूपतिसाहिदेवःस्वकीर्त्तिभिर्निर्जितदुग्धसिंधुः॥
अभूत्ततःश्रीभगवंतदेवःसदैवभाग्योदयवान्क्षितीशः॥ ९ ॥ यद्दानद्रविणाद्रिनिर्जितवपूरत्नाचलोलज्जयादूरेस्तब्धइलावृतेनिविशते
नोयत्रपुंसांगतिः ॥ किंचत्रस्यदरातिवामनयनानेत्रांबुभिर्वर्द्धितस्तेजोग्निर्वडवामुखोत्थहुतभुक्तुल्यःकथंनोभवेत्॥ १०॥ आज्ञप्तस्ते
नराज्ञाविबुधकुलमणिर्दाक्षिणात्यावतंसोभट्टश्रीनीलकंठःस्मृतिषुदृढमतिर्जैमिनीयेद्वितीयः॥ आज्ञामादायमूर्ध्नासविनयममुनातस्यस

र्वान्निबंधान्दृष्ट्वासम्यक्‌विविच्य प्रविततकिरणस्तन्यते भास्करोयं ॥ ११ ॥ प्रतारकैराहृतमत्रकिंचिन्मयातुनिर्मूलतयातदुज्झितं ॥ ऊनोक्तिता
तोनहिकेनकाचित्स्वपुष्पहीना ऽपचितिर्नहीयते ॥ १२ ॥ संस्काराचारकालाः समुचितरचनाः श्राद्धनीतीविवादोदानोत्सर्गप्रतिष्ठाजगतिजयक
राः संगतार्थानुबद्धाः ॥ प्रायश्चित्तंविशुद्धिस्तदनुनिगदिताशांतिरेवंक्रमेणख्यातायंथेत्रसुद्धेबुधजनसुखदाहादशैतेमयूखाः ॥ १३ ॥ भगवंत-
भास्करारव्येग्रंथेस्मिन्शिष्टसंमतेचततः ॥ शांतिविवेकमयूखः प्रतन्यतेनीलकंठेन ॥ १४ ॥ अस्पष्टपापनिदानकैहिकमात्रानिष्टनिवर्त्तकंपापा
प्रयोजकंवैधंकर्मशांतिकं ॥ क्षयादिहरदानादावतिप्रसंगंवारयितुंनिदानकांतं ॥ आमुष्मिकानिष्टनिवर्त्तकेतंवारयितुमैहिकेति ॥ प्रायश्चित्तंवा
रयितुंमात्रपदं ॥ प्रायश्चित्तंत्वामुष्मिकानिष्टनिवर्त्तकमपि ॥ अभिचारप्रत्यभिचारादौवारयितुंपापा प्रयोजकमिति ॥ तयोः फलतोहिंसात्वेनतद
नुष्ठानेप्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात् ॥ अनिष्टनिवर्त्तकत्वंच शांतिकस्यतन्निदानपापनाशरूपसामग्रीविघटकत्वेनपुष्टिफलकंवैधंक
र्मपौष्टिकं ॥ तत्रपरिभाषामार्कंडेयपुराणे ॥ शिरःस्नातश्चकुर्वीतदैवंपित्र्यमथापिवा ॥ प्राङ्मुखोदङ्मुखोवापिश्मश्रुकर्मचकारयेत् ॥ तत्रैव
॥ देवार्चनादिकर्माणितथागुर्वभिवादनं ॥ कुर्वीतसम्यगाचम्यप्रयतोपिसदाद्विजः ॥ बृहन्मनुः ॥ प्राणानायम्यकुर्वीतसर्वकर्माणिसंयतः
॥ मार्कंडेयः ॥ संकल्प्यविधिवत्कुर्यात्स्नानदानव्रतादिकं ॥ देवलः ॥ मासपक्षतिथीनांचनिमित्तानांचसर्वशः ॥ उल्लेखनमकुर्वाणोनतस्य
फलभाग्भवेदिति ॥ मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेपि ॥ यत्तुअनेकदिनसाध्येकर्मण्याद्यदिनेसंकल्पकालीनातिथिमधिक-

रणत्वेनोल्लिख्यज्योतिष्टोमेनाहंयक्ष्येइत्यादिसंकल्प वाक्यं प्रयुंजतेयायज्जूकाः॥ तत्तुपदानामन्वयायोगादनादर्त्तव्यं॥ यदपिकेचित्तेनतेन
रूपेणप्रयोगांगतयाविहितानामेवमासादीनामुल्लेखइति॥ तदपिनमानाभावात्॥ अविहितमासादिकआधानादौमासपक्षतिथीनांज्योति
ष्टोमएकादशीव्रतादौचमासपक्षयोरुल्लेखाभावप्रसंगाच्च॥ अतोज्योतिष्टोमादावेकादश्यादिपूर्णिमांतानामुल्लेखः। एवमन्यत्रापीतिदिक्॥
अत्रचशूद्राणामप्यधिकारः॥ श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतइत्यादिवाक्येषुश्रावणस्यवृत्त्यर्थतयारागप्राप्तत्वेनतद्विधौवैयर्थ्यापत्तेर्नि
जविवक्षयाश्रवणविधानात्तेषांपुराणश्रवणेधिकारेणज्ञानसद्भावात्॥ वैदिकमंत्राभावेकथंतत्कर्म्मस्वधिकारइतिचेत् शृणुधर्मेप्सवस्तु
धर्मज्ञाःसतांधर्ममनुष्ठिताः॥ मंत्रवर्ज्यंनदुष्यंतिप्रशंसांप्राप्नुवंतिचेतिमनुनामंत्रवर्जनात्॥ यत्तु॥ मेधातिथिर्मंत्रवर्ज्जितेषूपवासादिष्वधि
कारार्थमिदंनतुसमंत्रकेषुमंत्रपर्य्युदासेनाधिकारार्थमितितन्न॥ अमंत्रकोपवासादिषुश्रवणविधिनैवाधिकारसिद्धावेतद्वाक्यानर्थक्याप
त्तेः॥ अतएव॥ मोक्षधर्मेपि॥ मंत्रवर्जंनदुष्यंतिकुर्वाणाःपौष्टिकींक्रियामिति॥ अत्रैतद्वाक्यस्यपौराणत्वेनतत्सामान्योपस्थितपौराण
क्रियोद्देशेनमंत्रवर्जनविधौपौष्टिकीमित्यस्योद्देश्यविशेषणत्वेनाविवक्षितत्वं॥ एवंमनुवाक्यस्यैतस्यचैकैकवश्रुतिमूलत्वेनकल्प्यते॥ गृह्य
परिशिष्टे॥ आदौविनायकःपूज्यअंतेतुकुलदेवताः॥ शौनकः॥ पुण्याहवाचनविधिंवक्ष्यामोथयथाविधि॥ प्रयोक्तुःकर्मणामादावंतेचा
दयसिद्धये॥ कर्मप्रदीपे॥ कर्मादिषुतुसर्वत्रमातरःसगणाधिपाः॥ पूजनीयाःप्रयत्नेनपूजिताःपूजयंतिताः॥ प्रतिमासुचशुद्धासुलिखि

स्वावापटादिषु ॥ अपिवाक्षतपुंजेषुनैवेद्यैश्च पृथग्विधैः ॥ कुड्यलग्नावसोर्धाराः सप्तवारं घृतेनतु ॥ कारयेत्पंचधारावानातिनीचानचोच्छ्रिताः
॥ आयुष्याणिचशांत्यर्थंजस्वातत्रसमाहितः ॥ षड्भ्यः पितृभ्यस्तदनुश्राद्धदानमुपक्रमेदिति ॥ षड्भ्यइतिकातीयछंदोगपरं ॥ अन्येषांतुन
वदैवत्यं ॥ अन्वष्टकास्ववृद्धौचगयायांचक्षयेहनि ॥ अत्रमातुःपृथक्श्राद्धमन्यत्रपतिनासहेतिवचनात् ॥ सर्वत्राचार्योयजमानसमशारवी
यएव ॥ अन्यथाचार्यस्ययजमानशारवाध्ययनाभावेतच्छारवीयपदार्थानांनिर्वाहएवनस्यात् ॥ स्वशारवयैवानुष्ठानेतुवैगुण्यं ॥ तथाचपरा
शरः ॥ यःस्वशारवांपरित्यज्यपरशारवांसमाश्रयेत् ॥ अप्रमाणमृषिंकृत्वासोंधेतमसिमज्जतीति ॥ ऋत्विजस्तुभिन्नशारवीयाअपि ॥ सर्वे
प्याचार्यब्रह्मर्त्विजोमधुपर्केणपूज्याः ॥ ऋत्विजोवृत्वामधुपर्कमाहरेदित्याश्वलायनोक्तेः ॥ संपूज्यमधुपर्केणऋत्विजःकर्मकारयेदिति वि
श्वामित्रोक्तेश्च ॥ योऋत्विक्यच्छारवीयंकर्मकरोतितच्छारवोक्तेनप्रकारेणकांडानुसमयेनमधुपर्कंकुर्वीतियायजूकाःकेचित् ॥ परेयजमान
शारवोक्तेन ॥ यजमानेनस्वशारवीयाऋत्विग्भिश्चस्वस्वशारवीयाःपदार्था अनेकेषुऋत्विक्षुपदार्थानुसमयेनानुष्ठेयाइतितुयुक्तंतत्तच्छारवा
ध्ययनजन्यज्ञानस्यांगत्वादेकप्रयोगविधिपरिग्रहाच्च ॥ ऋत्विग्भ्योदेयमुक्तंलिंगपुराणे ॥ वस्त्रयुग्मंतथाऽप्यूरं केयूरं कर्णभूषणं ॥ अंगुली
भूषणंचैवमणिबंधस्यभूषणं ॥ कंठाभरणयुक्तानिप्रारंभेधर्मकर्मणः ॥ पुरोहितायदत्वाथऋत्विग्भ्यश्चापिदापयेदिति ॥ आपःपूर्यंतेस्मि
न्नित्यपूरंजलपात्रं ॥ मत्स्यपुराणे ॥ यजमानःसपत्नीकःपुत्रपौत्रसमन्वितः ॥ पश्चिमद्वारमाश्रित्यप्रविशेद्यागमंडपं ॥ संग्रहे ॥ समंततश्च

सिद्धार्थान्किरेद्रक्षोघ्नमन्त्रतः ॥ प्रतिष्ठासारे ॥ सर्वतःपंचगव्येनप्रोक्षयेद्यागमंडपं ॥ आपोहिष्ठात्र्यृचेनैवततःस्वस्त्ययनंजपेत् ॥ अत्रहेमाद्रौवास्तु
पूजाप्युक्ता ॥ समंडपंप्रविश्याथतोरणादिप्रपूज्यच ॥ वास्तुयागंततःकुर्यात्प्रासादेमंडपेऽथवा ॥ वास्तुमंडलेच ॥ नैरृत्यांदिशिवास्त्वीशंब्रह्मा
द्यांश्चसमर्चयेदितिशारदोक्तेः ॥ वास्तुहोमस्तुभिन्नस्थंडिलेकार्यः ॥ मुख्यायतनेवा ॥ तत्राप्याद्योपृथक्प्रयोगतयाप्रधानसमतंत्रतयावा ॥ शा
रदातिलकेतुहोमएवनोक्तः ॥ सर्वंचशांतिकंपौष्टिकंमहादानादिलौकिकाग्नौकार्य्यं ॥ श्रौतस्मार्त्ताग्निप्राप्तौमानाभावात् ॥ यत्तुमनुः ॥ वैवाहि
केग्नौकुर्वीतगार्ह्यंकर्मयथाविधि ॥ पंचयज्ञविधानंचपंक्तिंवाऽन्वाहिकींगृहीतितत्स्पष्टंगृह्योक्तपरं ॥ वैवाहिकइतिन्वदारदायाद्यकालिकयोर-
प्युपलक्षकं ॥ तत्सजातीयसंस्कारस्यैवसाधनतावच्छेदकत्वात् ॥ यदपियाज्ञवल्क्यः ॥ स्मार्त्तंकर्मविवाहाग्नौकुर्वीतप्रत्यहंगृही ॥ दायका
लाहृतेवापिश्रौतवैतानिकाग्निष्विति ॥ तत्रापिसामान्यंस्मार्त्तपदंगार्ह्यंउपसंह्रियते ॥ एतेनाहवनीयादयोनिरस्ताः ॥ यदाहवनीयेजुह्वतीत्या
दावश्वप्रतिग्रहेष्टौवैदिकत्वसाम्येनवैदिकाश्वदानप्रतिग्रहहोपस्थितिवत् वैदिकहोमोपस्थितेश्च ॥ यद्यप्यत्रगार्ह्यंस्मार्त्तएवश्रौतंचवैतानिकएवे
तिनियमेनस्मृत्युक्तेपिकर्मणिश्रौतस्मार्त्ताग्न्योःप्राप्तिःसंभाव्यते ॥ तथापिनसाहवनीयावसथ्यत्वादिरूपेण ॥ किंतुलौकिकसाधारणज्वल-
नत्वेनैव ॥ अवैधाहुतिप्रक्षेपे आहवनीयत्वादिविघातापत्तेश्च अतएवसर्वाधानिनऔपासनाभावाद्वैतानिकाप्राप्तेश्चतेनगार्ह्यंलौकिकएवका
र्य्यं ॥ अमुमेवसर्वमर्थंस्मृत्यर्थसारकृदपिसंजग्राह ॥ गार्ह्यमौपासनेकुर्यात्सर्वाधानीतुलौकिके ॥ स्मार्त्तंचलौकिकेकुर्याच्छ्रौतंवैतानिकाग्निषि

ति ॥ यत्तुनारायणवृत्तौ ॥ सर्वाधानिनासीमंतोन्नयनादिगार्ह्यकर्मार्थंस्मार्त्ताग्निरुत्पादनीयइति ॥ तत्रमूलमन्वेष्यं ॥ यदपिविज्ञानेश्वरोग्रह-
यज्ञऔपासनइत्यूचे ॥ तत्रापिमूलमन्वेष्यं ॥ कातीयपरंवातत्तत्सूत्रेतथाम्नानात् ॥ अतएवसविनायकशांतौलौकिकाग्निमेवाऽवोचत् ॥ अतः
स्मृत्यक्तंलौकिकएवेतिकृत्यरत्नाकरे ॥ शुभपात्रंतुकांस्यंस्यात्तेनाग्निंप्रणयेद्बुधः ॥ तस्याभावेशरावेणनवेनाभिमुखंचतं ॥ गोभिलीये ॥ आहूय
चैवहोतव्योयोयत्रविहितोनलः ॥ तथा ॥ लक्षहोमेचवह्निःस्यात्कोटिहोमेहुताशनः ॥ पूर्णाहुत्यांमृडोनामशांतिकेवरदःसदा ॥ अन्येषुसंस्कारा-
दिकर्मस्वग्नेर्नामविशेषाःप्रयोगरत्नेज्ञेयाः ॥ होमेविशेषोगोभिलीये ॥ नमुक्तकेशोजुहुयान्नातिपातितजानुकः ॥ उत्तानेनैवहस्तेन अंगुष्ठाग्रेणपी
डितं ॥ संहतांगुलिपाणिस्तुवाग्यतोजुहुयाद्धविरिति ॥ वहुकर्तृकेहोमेप्रत्याहुतित्यागाशक्तेर्होमारंभएवसर्वादेवताश्चतुर्थ्यंतेनोद्दिश्यसर्वा-
णिद्रव्याणित्यजेदितिहेमाद्र्यादयः ॥ अथविनायकस्नपनं ॥ याज्ञवल्क्यः ॥ विनायकःकर्मविघ्नसिद्ध्यर्थंविनियोजितः ॥ गणानामाधिपत्येच
रुद्रेणब्रह्मणातथा ॥ तेनोपसृष्टोयस्तस्यलक्षणानिनिबोधत ॥ स्वप्नेऽवगाह्यतेत्यर्थंजलंमुंडांश्चपश्यति ॥ काषायवाससश्चैवक्रव्यादांश्चाधिरो
हति ॥ अंत्यजैर्गर्दभैरुष्ट्रैःसहैकत्राऽवतिष्ठति ॥ व्रजन्नपितथात्मानंमन्यतेऽनुगतंपरैः ॥ उपसृष्टःउपद्रुतः ॥ स्वप्नेस्रोतसाऽपह्रियतेतत्रमज्जति
वानत्ववगाहनमात्रंविवक्षितंतस्यशुभसूचकत्वात् ॥ अंत्यजैश्चांडालैः ॥ प्रत्यदनलक्षणान्याह ॥ विमनाविफलारंभःसंसीदत्यनिमित्तकः ॥
तेनोपसृष्टोलभतेनराज्यंराजनंदनः ॥ कुमारीनैवभर्त्तारमपत्यंगर्भमंगना ॥ आचार्यत्वंश्रोत्रियश्चनशिष्योऽध्ययनंतथा ॥ वणिक्लाभंनचना

प्नोति कृषिंचापिकृषीबलः ॥ संसीदतिकारणंविनादीनमनस्कोभवति ॥ एतदुपलक्षणंयस्ययदिष्टंसन्वेदिष्टसामग्रीसत्वेतन्नप्राप्नोतितदातदुपद्रु-
तोबोध्यः॥ एतदुपद्रवपरिहारार्थंचकर्माह ॥ स्नपनंतस्यकर्त्तव्यंपुण्येन्हिविधिपूर्वकं ॥ अत्रपुण्येन्हीत्यविशेषेपिविशेषोऽ परार्केभविष्ये ॥ शुक्लपक्षे
चतुर्थ्यांचवारेणधिषणस्यच ॥ तिष्येन्चवीरनक्षत्रेतस्यैवपुरतोनृपेति ॥ अत्रादौदेवतापूजोक्तातत्रैव ॥ व्योमकेशंतुसंपूज्यपार्वतींभामजंतथा
॥ कृष्णस्यपित्तरंकेतुंअर्कमारंसितंतथा ॥ धिषणंक्लैदपुत्रंचकोणलक्ष्मंचभारत ॥ विधुंतुदंवाहुलेयंनंदकस्यचधारिणमिति ॥ व्योमकेशःशिवः
॥ भामजोगणेशः ॥ आरोभौमः ॥ सितःशुक्रः ॥ धिषणोगुरुः ॥ क्लैदपुत्रोबुधः ॥ कोणःशनैश्चरः ॥ लक्ष्मतद्भांश्चंद्रः ॥ वाहुलेयःस्कंदः ॥ नंदकधारी
कृष्णः ॥ गौरसर्षपकल्केनसाज्येनोत्सादितस्यच ॥ सर्वौषधैःसर्वगंधैर्विलिप्तशिरसस्तथा ॥ भद्रासनोपविष्टस्यस्वस्तिवाच्याद्विजैःशुभाः ॥
गौरसर्षपपिष्टेनगोघृतयुक्तेनोत्सादितस्योद्वर्त्तितस्य ॥ सर्वौषधानिछंदोगपरिशिष्टे ॥ कुष्टंमांसीहरिद्रेद्वेमुराशैलेयचंदनं ॥ वचाकर्चूरमुस्ते
चसर्वौषध्यःप्रकीर्त्तिताःइति ॥ सर्वगंधैश्चंदनकुंकुमागरुकस्तूरिकाजातीफलादिभिः ॥ वेद्यांसितवस्त्रप्रच्छादितश्रीपर्णीपीठभद्रासनंस्वस्ति
वाच्याःस्वस्तिवाचनीयाः ॥ ब्राह्मणद्वारास्वस्तिवाचनंकारयेदित्यर्थः ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ मृत्तिकांरोचनांगंधं
गुग्गुलुंचाप्सुनिक्षिपेत् ॥ याआहृताएकवर्णैश्चतुर्भिःकलशैर्ह्रदात् ॥ चर्मण्यानडुहेरक्तेस्थाप्यभद्रासनंततः ॥ आनडुहंचर्मचवेद्यांप्राग्ग्रीवमू
र्ध्वलोमचस्थाप्यमितिविज्ञानेश्वरः ॥ याआपःतेचत्वारोपिकलशाभद्रासनात्पूर्वादिंचतुर्दिक्षुस्थाप्याइतिसांप्रदायिकाः ॥ पूर्वादिदिक्त्रयाव-

स्थितकलशोदकेनाभिषेकक्रमेणमंत्रानाह ॥ सहस्राक्षंशतधारमृषिभिःपावनंकृतं ॥ तेनत्वामभिषिंचामिपावमानीःपुनंतुते ॥ भगंतेवरु
णोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि ॥ ललाटेकेशयोरक्ष्णोरापस्त-
द्घ्रंतुतेसदा ॥ सहस्राक्षंबृहुशक्तिकं ॥ पावमानीइत्यनंतरमापइतिशेषः ॥ भगंकल्याणं ॥ दौर्भाग्यमकल्याणं ॥ उदग्दिगवस्थितेनाभिषेके
पूर्वोक्तास्त्रयएवमंत्राः ॥ सवैश्चतुर्थमितिविज्ञानेश्वरोक्तलिंगात् ॥ किंच ॥ स्नातस्यसार्षपंतैलंस्रुवेणौदुंबरेणतु ॥ जुहुयान्मूर्द्धनिकुशान्सस-
व्येनपरिगृह्यच ॥ सव्यपाणिगृहीतकुशांतर्हितेसार्षपंतैलमुदुंबरनिर्मितेनस्रुवेणयजमानमूर्द्धनिजुहुयादाचार्यः ॥ मितश्चसंमितश्चैवत
थाशालकटंकटौ ॥ कूष्मांडोराजपुत्रश्चेत्यंतेस्वाहासमन्वितैः ॥ नामभिर्बलिमंत्रैश्चनमस्कारसमन्वितैः ॥ नमःस्वस्तिस्वाहेतिचतुर्थीएता
निषट्विनायकनामानिइतिविज्ञानेश्वरः ॥ अपरार्कस्तुशालकटंकटइत्येकवचनांतंपपाठ ॥ तेनतन्मतेपंचैवाहुतयोभवंति ॥ अत्रलौकिके
ग्नौस्थालीपाकविधिनाचरुंकृत्वातेभ्यएवाहुतिषट्कंहुत्वेंद्रादिदशलोकपालेभ्यस्तत्तन्नाम्नाबलिंदद्यात् ॥ इतिमिताक्षरायां ॥ तत्रचरुहो
मेइंद्रादिभ्योबलिदानेचमूलंचिंत्यं ॥ अंतेस्वाहासमन्वितैर्नामभिर्जुहुयात् ॥ नमस्कारसमन्वितैश्चेत्यादिभ्यएवबलिंदद्यादितिवक्ष्यमाणे
नसंबध्यतइतितुयुक्तं ॥ दद्याच्चतुष्पथेसूर्पे कुशानास्तीर्यसर्वशः ॥ कृताकृतांस्तंडुलांश्चपललौदनमेवच ॥ मत्स्यान्पक्वांस्तथैवामान्मांस
मेतावदेवतु ॥ पुष्पंचित्रंस्रुगंधिंचसुरांचत्रिविधामपि ॥ मूलकंपूरिकापूपास्तथैवौंडिरकस्रजः ॥ दध्यन्नंपायसंचैवगुडपिष्टंसमोदकं ॥ ए

तान्सर्वान्समाहृत्य भूमौकृत्वाततः शिरः॥ कृताकृतान्सकृदवहतान्॥ पललौदनःतिलपिष्टमिश्रओदनइतिमिताक्षरायां॥अपक्कमांसमिश्र
ओदनइतितुयुक्तं॥ पललंक्रव्यमामिषमितिकोशात् ॥ आमानपक्कान्मांसमेतावदेवतु ।पक्कमपक्कमांसमन्यदित्यर्थः॥ त्रिविधासुरागौडी
पैष्टीमाध्वीच ॥मूलकंकंदाकारोभक्ष्यविशेषइतिमिताक्षरायां॥स्वरूपतएवग्राह्यमितितुयुक्तं॥ उभयमपिग्राह्यमितिमहार्णवे ॥ अपूपाःस्ने
हपक्वागोधूमविकाराइतिविज्ञानेश्वरः॥उंडेरकाःपिष्टविकारानानाविधास्तेस्त्रजइत्यच्यंते॥गुडपिष्टंगुडमिश्रंशाल्यादिपिष्टंअत्रसुरामांसंचाः
ब्राह्मणविषयं॥ ब्राह्मणैस्तुमांससुरास्थानेतुसलवणंपायसंदुग्धंचग्राह्यं॥ पायसंलवणोपेतंमांसस्थानेप्रकल्पयेत्॥दुग्धंलवणसंमिश्रंसु
रास्थानेप्रकल्पयेदिति स्मरणादिति महार्णवादिषुविनायकांबिकागायत्रीभ्यांविनायकमंबिकांचनमस्कृत्य पूर्वोक्तद्रव्यजातंतयोरग्रतउपहृ
त्यतच्छेषंशूर्पेनिधायचतुष्पथेशूर्पंसंस्थाप्यबलिंदद्यादेतैर्मंत्रैः॥ बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा॥ मरुतोश्विनौरुद्राःसुपर्णाः
पन्नगाग्रहाः॥असुरायातुधानाश्चपिशाचामातरोरगाः॥ शाकिन्योयक्षवेतालायोगिन्यःपूतनाशिवाः॥जंभकाःसिद्धगंधर्वानागाविद्याध
रानगाः॥दिक्पालालोकपालाश्चयेचविघ्नविनायकाः॥जगतांशांतिकर्त्तारोब्रह्माद्याश्चमहर्षयः॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः॥
सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः॥दद्यादित्यत्रापिदेहलीदीपवदन्वेति॥विनायकस्यजननीमुपतिष्ठेत्ततोंबिकां॥दूर्वासर्षपपु-
ष्पाणांदत्वार्घ्यंपूर्णमंजलिं॥अनंतरंविनायकमंबिकांचदूर्वाद्यंजलिमर्घ्यंचदत्वोपतिष्ठेत॥उपस्थानमंत्रमाह॥रूपंदेहियशोदेहिभगंभग

वतिदेहिमे॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे॥ भगवन्नित्यूह्यविनायकमभ्युपतिष्ठेतेतिविज्ञानेश्वरः॥ अत्रमदनः॥ विनायकोपस्था-
नंकृत्वाऽविकोपस्थानंकार्य्यमित्याह॥ किंच॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः॥ ब्राह्मणान्भोजयेद्द्याद्वस्त्रयुग्मंगुरोरपि॥ गुरोराचार्या
य॥ अपिशब्दाद्दक्षिणामपि॥ एवंविधंकर्मकुर्वतः॥ एवंविनायकंपूज्यग्रहांश्चैवविधानतः॥ कर्मणांफलमाप्नोतिश्रियमाप्नोत्यनुमां॥ अस्याः
कर्मांगत्वेनपौष्टिकत्वेनचवर्णचतुष्टयस्याप्यत्राधिकारः॥ शूद्रस्यतुमंत्रवर्जंतान्प्रक्रम्य॥ मंत्रवर्जन्नदुष्यंतिकुर्वाणाःपौष्टिकींक्रियामितिमोक्ष
धर्मश्रवणादितिवदंति॥ महार्णवोपि॥ यजमानस्तुशूद्रश्चेदितिवदन्तस्याधिकारमभिप्रैति॥ ॥इतिविनायकशांतिः॥ ॥अथप्रयोगः॥
कर्त्तादेशकालौसंकीर्त्याऽमुककर्मणोनिर्विघ्नतासिद्ध्यर्थमुपसर्गनिवृत्त्यर्थंवाविनायकस्नपनंकरिष्यइतिसंकल्पयेत्॥ ततःपुण्याहवाचन-
नांदीश्राद्धांतंयथोक्तंकुर्यात्॥ अपरेपुण्याहवाचनंनेच्छंति॥ अग्रेतस्यकर्त्तव्यत्वात्॥ अथाचार्य्यंऋत्विक्चतुष्टयंवृणुयात्॥ ऋत्विजोनसंतीति
केचित्॥ तदाचार्यएववक्ष्यमाणमभिषेकंकुर्यात्॥ यजमानःप्रतिमास्वक्षतपुंजेषुवा॥ शिवं॥पार्वतीं॥गणेशं॥वासुदेवं॥केतुं॥अर्कं॥भौमं
॥शुक्रं॥गुरुं॥बुधं॥शनिं॥चंद्रं॥राहुं॥स्कंदं॥कृष्णं॥चावाह्यपूजयेत्॥ तथाचार्यःपंचवर्णैःपूर्वादिचतुर्दिक्षुचत्वारिमध्यस्थवेद्यांचैकमिति-
स्वस्तिकपंचकमालिख्यमध्यस्थस्वस्तिकोपरि आनडुहंरक्तंचर्मप्राचीनग्रीवमूर्ध्वलोमसंस्थाप्यतस्योपरिश्रीपर्णीपीठंसंस्थाप्यसितेनवाससा
संछादयेत्॥ एतद्भद्रासनमिति॥ अथचतुर्षुस्वस्तिकेषुपूर्वादिदिक्षुचत्वारोपिऋत्विजःकलशान्संस्थापयेयुः॥ आचार्योवा॥ तत्रायंप्रकारः॥

महीद्यौः पृथिवीचनेति भूमिंस्पृशन् संप्रार्थ्य ओषधयः समितियवान् क्षिस्वा आकलशेष्विति तेषु कलशं संस्थाप्य इमंमेगंगेतितीर्थोदकेनापू-
र्य गंधद्वारामिति चंदनागरुकस्तूरीकर्पूरगोरोचनादीन् गंधादीन् गुग्गुलंचनिक्षिपेत् ॥ याओषधीरितिसर्वौषधीः ॥ कांडात्कांडादितिदूर्वाः ॥ अ
श्वत्थेवइतिपंचपल्लवान् ॥ स्योनापृथिवीत्यनेन ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतमित्यनेनपंचमृदः
क्षिपेत् ॥ याः फलिनीरितिफलं ॥ सहिरत्नानीतिपंचरत्नानि हिरण्यरूपमितिहिरण्यं ॥ युवासुवासाइत्यनेनवस्त्रेण रक्तसूत्रेणाच्चवेष्टयेत् ॥
पूर्णादर्वीतिधान्यपूर्णपात्रं कलशोपरिनिदध्यात् ॥ अत्रवरुणावाहनपूजनेअपिकेचिदाहुः ॥ ततः कलशेसर्वेसमुद्राइतिगंगाद्यावाहनं ॥ ततः कुं
भाभिमंत्रणं ॥ कलशस्यमुखेविष्णुः कंठेरुद्रः समाश्रितः ॥ मूलेत्वस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसप्तसप्तद्वीपावसुं
धरा ॥ ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताइति ॥ ततः कुंभप्रार्थना ॥ देवदानवसंवादेमथ्यमाने
महोदधौ ॥ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठि
ताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः ॥ त्वत्प्र
सादादिमंयज्ञंकर्त्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदेति ॥ ततोऋत्विजआनोभद्रेतिशांतिसूक्तं पठेयुरितिकेचित् ॥ आनो
भद्रेतिशांतिसूक्तस्य राहूगणोविश्वेदेवास्त्रिष्टुप् आद्यासप्तमीच्चजगत्यः षष्ठीविराट् शेषास्त्रिष्टुभः शांतिसूक्तजपेविनियोगः ॥ आनोभद्राः ॥

शन्नोवातःपवतामित्यादिकांवा ॥ तस्मिन्नेवसमयेआचार्योभद्रासनस्योत्तरईशान्यांवावस्त्राच्छादितपीठादौविनायकप्रतिमामंबिकाप्रतिमां
चाग्न्युत्तारणपूर्वंप्रतिष्ठाप्यषोडशोपचारैःपूजयेदितिनिबंधकृतः ॥ तत्रविनायकमंत्रः ॥ गणानांत्वागृत्समदोगणपतिर्जगती गणपत्यावाहनेवि
नियोगः ॥ ॐ गणानांत्वा ॥ ॐ तत्पुरुषायविद्महे वक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयादितिवा ॥ गौर्यास्तु गौरीर्मिमायदीर्घतमाऽउमाजग
ती गौर्य्यावाहनेविनियोगः ॥ गौरीर्मिमायसुभगायैविद्महेकाममालिन्यैधीमहि ॥ तन्नोगौरीप्रचोदयादिति ॥ अत्रमिताक्षरायांचरुहोमो
प्युक्तः ॥ शिष्टाश्चकुर्वंति तस्मिन्पक्षेआचार्योगृह्योक्तविधिनाकुंडेस्थंडिलेवाऽग्निंप्रतिष्ठाप्यप्रादेशमात्रंसमिद्द्वयमादायास्मिन्होमेदेव
तापरिग्रहार्थमन्वाधानंकरिष्यइतिसंकल्प्यचक्षुषीआज्येनेत्यंतमुक्त्वाअत्रप्रधानंमितंसंमितशालंकटंकटंकूष्मांडराजपुत्रमेताःप्रधा
नदेवताएकैकयाचर्वाहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्याद्युक्त्वाग्नावाद्ध्यात् ॥ अपरार्कमतेतुपंचैवाहुतयस्तन्मतेत्वाधानेहोमद्वये
चतथैवानुसंधेयं ॥ ततःपरिसमूहनादिचरुश्रपणांतंकृत्वागोघृतलोलीकृतेनगौरसर्षपकल्केनोद्वर्त्तितांगंसर्वौषधिचूर्णैःकस्तूरिका
गरुचंदनादिभिर्विलिप्तशिरसंयजमानमाचार्योभद्रासनेउपवेशयेत् ॥ ततोयजमानःस्वस्तिवाचनंकुर्यात् ॥ अनंतरंरूपगुणशालिनी
भिःसुवासनीभिर्नीराजनंकारयेत् ॥ ततोभद्रासनात्पूर्वदेशावस्थितंकलशमादायाभिषिंचेदाचार्यः ॥ मंत्रश्च ॥ सहस्राक्षंशतधारमृ
षिभिःपावनंकृतं ॥ तेनत्वामभिषिंचामिपावमानीःपुनंतुते ॥ ततोदक्षिणदेशावस्थितंकलशमादाय भगंतेवरुणोराजाभगंसूर्योबृह-

स्पतिः ।। भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुरित्यनेनाभिषिंचेत् ।। ततःपश्चिमदिगवस्थितंकलशमादाययत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्ध-
नि ।। ललाटेकेशयोरक्ष्णोरापस्तद्घ्नंतुतेसदेति ।। ततउदक्देशावस्थितंकलशमादायपूर्वोक्तैस्त्रिभिर्मंत्रैरभिषिंचेत् ।। बृहत्पराशरेणान्येपिमं-
त्राउक्ताः ।। एतद्दैपावनंस्नानंसहस्राक्षमृषिस्मृतं ।। तेनत्वाशतधारेणपावमान्यःपुनंतुमां ।। शक्रादिदशदिक्पालाब्रह्माद्याकेशवादयः ।। आप-
स्तद्घ्नंतुदौर्भाग्यंशांतियच्छंतुसर्वदा ।। सुमित्र्यानआपओषधयःसंतु दुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ।। समुद्रागिरयोन-
द्योमुनयश्चपतिव्रताः ।। दौर्भाग्यंघ्नंतुतेसर्वेशांतियच्छंतुसर्वदा ।। पादगुल्फोरुजंघादौनितंबोदरनाभिषु ।। स्तनोरुबाहुहस्ताग्रग्रीवाअं-
सांघ्रिसंधिषु ।। नासाललाटकर्णभ्रूकेशांतेषुचयत्स्थितम् ।। तदापोघ्नंतुदौर्भाग्यंशांतियच्छंतुसर्वदा ।। इत्येतैरप्यभिषिंचेदितिकेचित् ।।
चतुर्थकलशाभिषेचनएवैतेपठनीयाः ।। अथाचार्योयजमानस्यपश्चिमतस्तिष्ठन्सव्यपाणिगृहीतकुशांतर्हितेयजमानशिरसिऔदुंबरेण
स्रुवेणसार्षपंतैलंजुहुयात् ।। ओंमितायस्वाहा ।। यजमानोमितायेदंनममेतित्यजेदेवंसर्वत्रापि ।। ओं संमितायस्वाहा ।। ओंशालायस्वा०
।। ओंकटंकटाय० ।। ओंकूष्मांडाय० ।। ओंराजपुत्रायेति ।। अथाचार्योग्न्यर्चनाद्याज्यभागांतंकृत्वाचरुणामितादिभ्यएवजुहुयाद्यजमान-
स्तुपूर्ववत्त्यजेत् ।। आचार्यःस्विष्टकृदादिप्रणीताविमोकांतंकर्मशेषंसमापयेत् ।। यजमानस्त्वभिषेकशालायामिंद्रादिदशलोकपालेभ्यो
नाम्नादिक्षुविदिक्षुचबलीन्दद्यात् ।। एतानिअग्निस्थापनचरुहोमदिक्पालबलिदानानिमिताक्षरामनुरुध्योक्तानि ।। ततोमितायएष-

बलिर्नममेतिपायसेनमाषभक्तेनवाबलिंदत्वाविनायकांबिकयोरग्रतः सकृदवहततंडुलानांमांसेनतिलपिष्टेनवामिश्रमोदनमत्स्यमांसं
पक्कमपक्वंच गौडी पैष्टी माध्वीतित्रिविधांसुरांच ॥ब्राह्मणस्यमांसस्थानेसलवणंपायसंसुरास्थानेसलवणंदुग्धं चित्रंपुष्पंसुगंधिद्रव्यंमू
लकंपूरिकाः अपूपाः उंडेरकस्रजः दध्यन्नंपायसंगुडमिश्रतंडुलादिपिष्टंमोदकांश्चपात्रेसंस्थाप्य तत्पुरुषायविद्महेइतिमंत्रेणविनायकाय
सुभगायैविद्महेइतिमंत्रेणचांबिकायैनिवेदयेत् ॥ अथाचार्योनूतनंशूर्पेसर्वमुपहारशेषंसंस्थाप्यचतुष्पथंगत्वातत्रगोमयेनोपलिप्यकुशा
नास्तीर्यतत्रशूर्पंप्राङ्मुखंसंस्थापयेत् ॥ यजमानस्त्वेतैर्मंत्रैर्बलिंदद्यात् ॥ बलिंगृह्णंत्विमंदेवा आदित्यावसवस्तथा ॥ मरुतोश्चाऽश्विनौरुद्राः
सुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचामातरोरगाः ॥ शाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥जंभकाःसिद्धगंधर्वा
नागाविद्याधरानगाः ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥जगतांशांतिकर्त्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमास्तु
परिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः ॥इति ॥ देवादित्यवसुमरुदश्विरुद्रसुपर्णपन्नगग्रहासुरयातुधानपिशाचमातृउर
गशाकिनीयक्षवेतालयोगिनीपूतनाशिवजृंभकसिद्धगंधर्वनागविद्याधरनगदिक्पाललोकपालविघ्नविनायकजगच्छांतिकर्तृब्रह्मादिमह
र्षिभूतप्रेतेभ्यइदंनममेतित्यागः ॥ ततःशिरसाभूमिंगत्वापुष्पयुतमर्घंतत्पुरुषायेतिमंत्रेणविनायकायसुभगायैइत्यंबिकायैचदद्यात् ॥ ततो
दूर्वासर्षपपुष्पाणांपूर्वोक्तविनायकमंत्रेणविनायकायांजलिंदद्यात् ॥ अंबिकायैतन्मंत्रेणतथैवदद्यात् ॥ ततोविनायकमंबिकांचोपतिष्ठेत्

॥मंत्रस्तु॥ रूपंदेहियशोदेहि भगंभगवतिदेहिमे॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे॥ अस्मिन्मंत्रे भगंभगवन्देहिमइत्यूह्यविनायक
मुपतिष्ठेत्॥ अनंतरंयजमानः प्राङ्मुखोपविष्टउदङ्मुखानाचार्यादीन्पूजयित्वादक्षिणांदद्यात्॥ ततउत्तिष्ठब्रह्मणस्पतइत्यनेनयांतुदेवग
णाइत्यनेनचविनायकमंबिकांचोत्थाप्यविसृज्यप्रतिमादिसर्वासामग्रीमाचार्यायदद्यात्॥ ततोयथाशक्तिभूयसींदक्षिणांदीनानाथेभ्योद-
त्वायथाशक्तिविनायकप्रीत्यर्थमंबिकाप्रीतयेचब्राह्मणान्भोजयित्वासंकल्प्यवायस्यस्मृत्येत्याद्युक्त्वान्यूनातिरिक्तंसर्वंसंपूर्णमस्त्वितिता-
न्संप्रार्थ्यतैरनुज्ञातः सुहृद्युतोभुंजीत॥ ॥इतिश्रीमच्छंकरभट्टसूरिसूनुभट्टनीलकंठकृते भगवंतभास्करे शांतिमयूखे विनायकशांतिप
द्धतिः समाप्ता॥ ॥अथग्रहयज्ञः॥ ॥स्कांदे॥ देवदानवगंधर्वायक्षराक्षसकिन्नराः॥ पीड्यंतेग्रहपीडाभिः किंपुनर्भुविमानवाः॥ शनैश्चरे
णसौदासोनरमांसेनियोजितः॥ राहुणापीडितोराजानलोभ्रांतोमहीतले॥ अंगारकविरोधेनरामोराष्ट्रान्निवासितः॥ अष्टमेनशशांकेन
हिरण्यकशिपुर्हतः॥ रविणासप्तमस्थेनरावणोविनिपातितः॥ गुरुणाजन्मसंस्थेनहतोराजासुयोधनः॥ पांडवाबुधपीडायांविकर्मणिनि
योजिताः॥ षष्ठेनोशनसायुद्धेहिरण्याक्षोनिपातितः॥ एतेचान्येचबहवोग्रहदोषैस्तुपीडिताः॥ याज्ञवल्क्यः॥ ग्रहाधीनानरेंद्राणामुच्छ्रा
याःपत्तनानिच॥ भावाभावौचजगतस्तस्मात्पूज्यतमाग्रहाः॥ प्रयोगपारिजातेउत्पलपरिमले॥ कार्यारंभेषुसर्वेषुप्रतिष्ठास्वध्वरेषुच॥ नववे
श्मप्रवेशेचगर्भाधानादिकर्मसु॥ आरोग्यस्नानसमयेसंक्रांतौरोगसंभवे॥ अभिचारेचयःकुर्याद्ग्रहपूजांविधानतः॥ सोभीष्टफलमाप्नोति

निर्विघ्नेननसंशयइति॥ श्रीकामः शांतिकामोवाग्रहयज्ञंसमाचरेत्॥ वृष्ट्यायुःपुष्टिकामोवातथैवाऽभिचरन्नपि॥ मात्स्ये॥ ग्रहयज्ञास्त्रिधाप्रो-
क्ताःपुराणश्रुतिकोविदैः॥ प्रथमोऽयुतहोमश्चलक्षहोमस्ततःपरः॥ तृतीयःकोटिहोमस्तुसर्वकामफलप्रदः॥ ग्रहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः॥
रुद्रायतनभूमौवाचतुरस्रमुदक्प्लवं॥ दशहस्तमथाष्टौवाहस्तान्कुर्याद्विधानतः॥ तस्यद्वाराणिचत्वारिकर्त्तव्यानिविचक्षणैः॥ स्कांदे॥ नवग्रहमखे-
कुंडंहस्तमात्रंसमंभवेत्॥ चतुरस्रमधोहस्तंयोनिवक्त्रंसमेखलं॥ योनिरेववक्त्रंयस्यतत्॥ पुत्रादिकामनयातुयोन्याद्याकाराअपिभवंति॥ चतुरं
गुलविस्तारामेखलातद्वदुच्छ्रिता॥ अत्रविशेषोपदेशादेकैवमेखलामात्स्ये॥ वितस्तिमात्रायोनिःस्यात्षट्सप्तांगुलविस्तृता॥ कूर्मपृष्ठोन्नता
मध्येपार्श्वयोश्चांगुलोच्छ्रिता॥ गजोष्ठसदृशीतद्वदायताच्छिद्रसंयुता॥ मेखलोपरिसर्वत्रअश्वत्थदलसन्निभा॥ एकंकुंडंचमंडपेशानभागेउ-
दीच्यांवेतिहेमाद्रिः॥ अयुतादिहोमंप्रकृत्यवशिष्ठस्तु॥ कुंडंतन्मध्यभागेतुकारयेच्चतुरस्रकम्॥ कुंडस्येशानभागेतुपूजावेदिंप्रकल्पयेदित्या
ह॥ अत्रचतुरस्रमित्यनेनक्षत्रियादिपुरस्कारेणविहितानामाकारविशेषाणांस्त्रीपुरस्कारेणविहितस्ययोन्याकारस्यनिवृत्तिर्योनौपुत्राःशु
भदलेंद्वाभइत्याद्याःकाम्यास्त्वाकाराभवंत्यैव॥ वेद्यांविशेषमाहगोभिलः॥ कुंडस्यप्रागुदीच्यांवाप्राच्यामुत्तरतोपिवा॥ चतुरस्रंचतुर्द्वारंक
र्त्तव्यंग्रहपीठकं॥ श्रीकामःपूर्वतःकुर्यात्पुष्ट्यर्थंदक्षिणेनतु॥ पश्चाद्विजन्मसिद्ध्यर्थंशांत्यर्थंचोत्तरेणतु॥ ऐशान्यांसर्वकामायत्वाग्नेय्यांत्वभि-
चारके॥ नैरृत्यांपुत्रलाभायपुष्ट्यर्थंवायवेनत्विति॥ ग्रहवेदीतुस्थंडिलपक्षेपिकार्या॥ वशिष्ठः॥ लिखेदष्टदलंपद्मंवेदिकोपरितंडुलैः॥ अत्रै-

कान्निब्रह्माचार्य्यपक्षमुक्तातेषांनवसंख्याकुंडेषु तत्तद्ग्रहाकारांश्चाह प्रयोगपारिजाते भगवान् ॥ मनोरमेशुचौदेशेहोमशालामलंकृताम् ॥ कृ-
त्वातुसंवृतांप्राज्ञोग्रहस्थानंप्रकल्पयेत् ॥ तन्मध्येभास्करस्थानंभवेत्पूर्वोत्तरेबुधः ॥ पूर्वस्मिन्भार्गवस्थानंसोमोदक्षिणपूर्वके ॥ दक्षिणस्यांकु-
जस्थानंराहोर्दक्षिणपश्चिमे ॥ शनेस्तुपश्चिमेस्थानंकेतोरुत्तरपश्चिमे ॥ उत्तरस्यांगुरोःस्थानमेवंचस्थंडिलंभवेत् ॥ स्थंडिलमग्न्यर्थं ॥ भास्करस्य
चवृत्तंस्याच्चंद्रस्यचतुरस्रकं ॥ कुजस्यतुत्रिकोणंस्याद्बाणाकारंबुधस्यतु ॥ गुरोर्दीर्घंचतुष्कोणंपंचकोणंसितस्यतु ॥ चापाकारंशनेराहोः शूर्पंकेतो-
र्ध्वजाकृतिं ॥ नवधाविभजेदग्निंश्रौतकर्मविधानतः ॥ ऋत्विजश्चयथायोगंकुंडेषुब्राह्मणाःपृथक् ॥ अथस्रुवेणजुहुयात्सूर्य्यपावकदारुकान् ॥ ऋत्वि-
जोजुहुयुः सर्वेस्रुवेणैवंपृथक्पृथक् ॥ अष्टौतुकलशान्गृह्यसमारोपणमग्निषु ॥ प्रधानाग्नौविधायेमानित्यंहोमंसमाचरेदिति ॥ अत्रैवंचस्थंडिलं
भवेदित्यनेनस्थंडिलानांकुंडानांचसस आकारस्तत्तद्दिक्षुनिवेशश्चोक्तः ॥ ब्राह्मणाःपृथगित्यनेननवाचार्याब्राह्मणाश्चनवेत्युक्तं ॥ अत्रार्थसंक्षेपः प्र-
योगपारिजाते ॥ मध्यकुंडेस्मार्त्ताग्निंप्रणीयततोनवाचार्याअष्टसुकुंडेष्वग्निंप्रणीयाज्यभागांतेऽर्कादिसमिद्भिर्गुडोदनादिहविर्भिराज्येनचग्रहादि
मंत्रैर्हुत्वाव्यस्तसमस्तव्याहृतिभिश्चतिलान्हुत्वास्विष्टकृदादिहोमशेषंकृत्वापूर्णाहुतीर्जुहुयुरिति ॥ कुंडमुक्त्वास्कांदे ॥ तस्यचोत्तरपूर्वेणस्थंडिलंहस्त
मात्रकं ॥ त्रिवप्रंचतुरस्रंचवितस्त्युच्छ्रायसंमितम् ॥ स्थंडिलंवेदिः ॥ वप्रोमेखला ॥ मात्स्ये ॥ द्व्यंगुलोच्छ्रितोवप्रः प्रथमः समुदाहृतः ॥ त्र्यंगुलोच्छ्रा
यसंयुक्तंवप्रद्वयमथोपरि ॥ द्व्यंगुलस्तत्रविस्तारः सर्वेषांकथितोबुधैः ॥ तत्रग्रहानाहयाज्ञवल्क्यः ॥ सूर्यः सोमोमहीपुत्रः सोमपुत्रोबृहस्पतिः ॥ शुक्रः

शनैश्चरोराहुःकेतुश्चेतिग्रहाःस्मृताः॥ स्कांदे॥ नवग्रहमखेकुर्याद्दृत्विजश्चतुरःशुभान्॥ अथवाचैकमभ्यर्च्यविधिनाब्रह्मणासह॥ त्रिविधमपिन
वग्रहमुपक्रम्यवशिष्ठस्तु॥ षोडशब्राह्मणान्शुद्धान्दंभाऽनृतविवर्जितान्॥ तेषांमध्येश्रेष्ठतममाचार्यंतंप्रकल्पयेदिति॥ अत्रपारिजातेनवाचा
र्यएकोब्रह्माषड्ऋत्विजः॥ आचार्येभ्योनवभ्यश्चग्रहार्चनफलंततइत्युक्तेः॥ आचार्यःकर्मएवकुर्यात्॥ परेत्वारंभमात्रं॥ धेन्वाद्याग्रहदक्षिणाअपिते
भ्यएवदेयाइत्याद्युक्तं॥ तद्युक्तं॥ उपक्रमेएकाचार्यस्यसंस्कार्यत्वेनैकत्वमविवक्षितं॥ तथाप्याचार्यस्यभूतभाव्युपयोगाभावात्संस्कार्यत्वानुपप
त्तेर्वृतआचार्यःस्वकर्मकुर्यादितिकल्पितेवाक्येउपादेयत्वादाचार्यस्यभवत्येकत्वंविवक्षितम्॥ उपपादितंचेदमध्वर्युंवृणीतेहोतारंवृणीतेपुरोहितं
वृणीतइत्यत्रमिश्रैः॥ जन्मभूर्गोत्रमग्निश्चवर्णस्थानमुखानिच॥ योऽज्ञात्वाकुरुतेशांतिंग्रहास्तेनाऽवमानिताः॥ तत्रवर्णजन्मनी आहदामोदरीये
वृद्धपराशरः॥ रक्तःकश्यपजोभानुःशुक्लोब्रह्मसुतःशशी॥ रक्तोरुद्रसुतोभौमःपीतःसोमसुतोबुधः॥ पीतोब्राह्मसुराचार्यःशुक्लःशुक्लोभृगूद्वहः
॥ कृष्णःशनीरवेःपुत्रःकृष्णोराहुःप्रजापतेः॥ कृष्णःकेतुःकृशानूत्थःकृष्णाःपापास्त्रयोप्यमी॥ स्कांदे॥ उत्पन्नोऽर्कःकलिंगेषुयमुनायांचचंद्रमाः
॥ अंगारकस्त्ववंत्यायांमगधायांहिमांशुजः॥ सैंधवेषुगुरुर्जातःशुक्रोभोजकटेतथा॥ शनैश्चरस्तुसौराष्ट्रेराहुर्वैराठिनापुरे॥ अंतर्वेद्यांतथाके
तुरित्येताग्रहभूमयः॥ यस्ययस्यचयद्गोत्रंतत्तेवक्ष्याम्यतःपरं॥ आदित्यःकश्यपेगोत्रेआत्रेयश्चंद्रमाभवेत्॥ भरद्वाजोद्भवोभौमस्तथात्रेयश्च-
सोमजः॥ शक्रपूज्योंगिरोगोत्रःशुक्रोवैभार्गवस्तथा॥ शनिःकाश्यपएवाद्यराहुःपैठीनसिस्तथा॥ केतवोजैमिनेयाश्चग्रहाग्निस्तदनंतरम्॥

आदित्यःकपिलोनामपिंगलःसोमउच्यते॥धूमकेतुस्तथाभौमोजाठराग्निर्बुधःस्मृतः॥गुरोश्चैवशिखानामशुक्रोभवतिहाटकः॥शनैश्चरोमहाते-
जाराहुकेत्वोर्हुताशनः॥एतानिग्रहविशेषतोग्निनामानि॥कर्मविशेषतोपिदेवीपुराणे॥शुभोग्रहविधौह्यग्निर्लक्षहोमेपराजितः॥कोटिहोमेशिवोव
न्हिःसर्वकामप्रदायकः॥क्वचित्तु॥लक्षहोमेतुवन्हिःस्यात्कोटिहोमेहुताशनइति॥स्कांदे॥भास्करांगारकौरक्तौश्वेतौशुक्रनिशाकरौ॥सोमपुत्रोन
गुरुश्चैवतावुभौपीतकौस्मृतौ॥कृष्णंशनैश्चरंविंद्याद्राहुंचित्राश्चकेतवः॥मध्येतुभास्करंविंद्याच्छशिनंपूर्वदक्षिणे॥दक्षिणेलोहितंविंद्याद्बुधं
पूर्वोत्तरेणतु॥उत्तरेणगुरुंविंद्यात्पूर्वेणैवतुभार्गवं॥पश्चिमेनशनिंविंद्याद्राहुंपश्चिमदक्षिणे॥पश्चिमोत्तरतःकेतुःस्थाप्योवैशुक्लतंडुलैः॥अथन-
वावर्णकैःकार्याःकार्याःस्वर्णादिधातुभिः॥याज्ञवल्क्यः॥ताम्रकात्स्फटिकाद्रक्तचंदनात्स्वर्णजादुभौ॥रजतादयसःसीसात्कांस्यात्कार्याग्रहा
स्तथा॥वशिष्ठः॥यथारुचिप्रमाणेनप्रतिमाःकल्पयेत्सुधीः॥अत्रसर्वग्रहाणांसूर्यादिःक्रमःस्पष्टः॥बौधायनस्तु॥सूर्यांगारकशुक्रचंद्रबुध
गुरुशनयइत्याह॥स्कांदे॥भानुंतुमंडलाकारंसोमंतुचतुरस्रकं॥अंगारकंत्रिकोणंचबुधंबाणाकृतिंतथा॥दीर्घंचतुरस्रंगुरुंपंचास्रंभार्गवंत-
था॥धनुस्तुल्यंशनिंविंद्याद्राहुंशूर्पाकृतिंतथा॥ध्वजाकाराःकेतवश्चगणेशंतत्ररूपिणं॥रूपिणंहस्तपादाद्यवयवयुक्तं॥स्थापयेच्छुक्लतंडुलैर्व
र्णकैर्लेख्याइत्येतत्पक्षयोर्मंडलाद्याकारतेतिहेमाद्रिः॥तत्रैव॥शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ॥प्रत्यङ्मुखःशनिःसोमःशेषादक्षि
णतोमुखाः॥इदंचशुक्रादीनांप्राङ्मुखत्वादिआदित्याभिमुखाःसर्वइतिमात्स्योक्तादित्याभिमुखत्वेनविकल्पते॥यत्तु॥हेमाद्रिर्विकल्पपरिजि

हीर्षयाप्राङ्मुखावूर्द्ध दृष्टीउदङ्मुखौवामदृष्टीप्रत्यङ्मुखोधोदृष्टिर्दक्षिणतोमुखाः दक्षिणदृष्ट्यइतिव्याचष्ट ॥ तत्रमूलंचिंत्यं॥विरोधतादवस्थंच॥
वर्णरूपगुणैर्युक्तान्व्याहृत्यावाहयेत्तुतान् ॥मात्स्ये॥पुण्येन्हिविप्रकथितेकृत्वाब्राह्मणवाचनं॥अग्निप्रणयनंकृत्वावेद्यामावाहयेत्सुरान्॥देवानां
तत्रसंस्थाप्याविंशतिर्द्वादशाधिका॥आदित्याभिमुखाःसर्वेसाधिप्रत्यधिदेवताः॥विष्णुधर्मोत्तरे॥अतःपरंप्रवक्ष्यामियोदेवोयोग्रहःस्मृतः॥अग्नि
र्र्कःस्मृतःसोमोवरुणःपरिकीर्त्तितः॥ अंगारकःकुमारश्चबुधश्चभगवान्हरिः॥ बृहस्पतिःस्मृतःशक्रःशुक्रोदेवीचपार्वती॥प्रजापतिःशनैश्चैवराहु-
र्ज्ञेयोगणाधिपः॥विश्वकर्मास्मृतःकेतुर्येग्रहास्तेसुराःस्मृताः॥अतएवाग्न्यादिलिंगकामंत्राःसूर्यादिस्थापनेउक्ताः॥स्कांदे॥ अग्निंदूतंदिनेशाय
चंद्रायाप्स्वंतइत्यपि॥स्योनापृथिविभौमायइदंविष्णुर्बुधायच॥ इंद्रआसांसुरेज्यायशक्रज्योतिःसितायच॥ प्रजापतेतिसौरायआयंगौरितिरा-
हवे॥केतवेब्रह्मजज्ञानंस्वैःस्वैर्मंत्रैःप्रतिष्ठिताः॥एतेषांचमंत्राणांव्याहृत्यावाहयेत्तुतानित्युत्काभिर्व्याहृतिभिरावाहनेविकल्पः॥मदनस्त्वावाह
नस्थापनयोर्भेदाद्व्याहृतिभिरावाहनं॥एतैर्मंत्रैःस्थापनमित्यूचेपारिजातेवामनस्तु॥प्रणवंत्वादितःकृत्वाभूर्भुवःस्वस्ततःपरम्॥चतुर्थ्यानाम-
मसंयुक्तंनमस्कारांतयोजितं॥एषमंत्रःसमाख्यातोग्रहपूजाविधायकः॥अनेनावाहनंकुर्यादनेनैवविसर्जनमित्यूचे॥अत्रावाहनवाक्येषुवि
शेषमाहबाधायनः॥ किरीटिनंपद्मासनंपद्मकरंपद्मगर्भसमद्युतिं सप्ताश्वंसप्तरज्जुंकलिंगदेशजंकाश्यपगोत्रंविश्वामित्रार्षंत्रिष्टुप्छंदसंरक्तां
बरधररक्ताभरणभूषितंरक्तगंधानुलेपनंरक्तछत्रध्वजपताकिनंमुकुटकेयूरमणिशोभितमारूढ्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रवि-

ष्टमधिदेवताग्निसहितंप्रत्यधिदेवतेश्वरसहितंरक्तवृत्तमंडलेपूर्वमुखमादित्यमावाहयामि॥किरीटिनंरक्तमाल्यांबरंरक्तशूलगदाधरंचतुर्भुजंमे
षगमनमवंतिदेशजंवाशिष्ठगोत्रजंजमदग्न्यार्षजगतीछंदसंरक्तांबरधरंरक्ताभरणभूषितंरक्तमाल्यानुलेपनंरक्तछत्रध्वजपताकिनंमुकुटकेयूर
मणिशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमधिदेवताभूमिसहितंप्रत्यधिदेवतास्कंदसहितंत्रिकोणरक्तमंडलेदक्षिणामु
खमंगारकमावाहयामि॥किरीटिनंश्वेतवर्णंचतुर्भुजंदंडिनंवरदंकाव्यंसाक्षसूत्रकमंडलुंकीटकदेशजंभार्गवगोत्रजंशौनकार्षपंक्तिछंदसंश्वेतां-
बरधरंश्वेताभरणभूषितंश्वेतंश्वेतगंधानुलेपनंश्वेतछत्रध्वजपताकिनंमुकुटकेयूरमणिशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडले
प्रविष्टमधिदेवतेंद्राणीसहितंप्रत्यधिदेवेंद्रसहितंशुक्लपंचकोणमंडलेप्राङ्मुखंभगवंतंशुक्रमावाहयामि॥किरीटिनंश्वेतांबरधरंदशाश्वंश्वेत
भूषणंपाशपाणिंद्विबाहुंवनायुदेशजमत्रिगोत्रमात्रेयार्षमनुष्टुप्छंदसंश्वेतांबरधरंश्वेतगंधानुलेपनंश्वेतछत्रध्वजपताकिनंमुकुटकेयूरमणि-
शोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमधिदेवतासहितंप्रत्यधिदेवतोमासहितंचतुरस्रमंडलेप्रत्यङ्मुखंसोममावा
हयामि॥किरीटिनंपीतमाल्यांबरधरंपीतवर्णंकर्णिकारसमद्युतिंखड्गचर्मगदापाणिंसिंहस्थंवरदंमगधदेशज मत्रिगोत्रजंभारद्वाजार्षबृह
तीछंदसंपीतांबरधरंपीताभरणभूषितंपीतगंधानुलेपनंपीतछत्रध्वजपताकिनंमुकुटकेयूरमणिशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वा-
णंग्रहमंडलेप्रविष्टमधिदेवताविष्णुसहितंप्रत्यधिदेवताविष्णुसहितंपीतवर्णमंडलेउदङ्मुखंबुधमावाहयामि॥किरीटिनंपीतवर्णंचतुर्भुजंदंडि-

वरदंसाक्षसूत्रकमंडलुंसिंधुदेशजमांगिरसगोत्रंवाशिष्ठार्षमनुष्टुप्छंदसंपीतांबरधरंपीताभरणभूषितंपीतगंधानुलेपनंपीतछत्रध्वजपताकिनंमुकु
टकेयूरमणिभूषितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टंअधिदेवतेंद्रसहितंप्रत्यधिदेवताब्रह्मसहितंपीतदीर्घचतुरस्रमंडलेउदङ्मु
खंगुरुमावाहयामि॥ किरीटिनमिंद्रनीलसमद्युतिंशूलधरंवरदंगृध्रवाहनंसबाणशरधरंसौराष्ट्रदेशजंकाश्यपगोत्रजंभृग्वार्षंगायत्रीछंदसंकृष्णांब
रधरंकृष्णाभरणभूषितंकृष्णागंधानुलेपनंकृष्णाछत्रध्वजपताकिनंमुकुटकेयूरमणिशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रवि
ष्टमधिदेवताप्रजापतिसहितंप्रत्यधिदेवतायमसहितंकृष्णाधनुर्मंडलेप्रत्यङ्मुखंशनैश्चरमावाहयामि॥ किरीटिनंकरालवदनंखड्गचर्मशूलधरंसिं
हासनस्थंपूर्वदेशजंपाटलिगोत्रमांगिरसार्षमनुष्टुप्छंदसंकृष्णांबरधरंकृष्णाभरणभूषितंकृष्णागंधानुलेपनंकृष्णाछत्रध्वजपताकिनंमुकुटके
यूरमणिशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमधिदेवतासर्पसहितंप्रत्यधिदेवताकालसहितंकृष्णाशूर्पमंडलेदक्षिणामु
खंराहुमावाहयामि॥ धूम्रान्द्विबाहून्पाशधरान्विकृताननान्गृध्रवाहनान्किरीटिनोमध्यदेशजान्जैमिनिगोत्रजान्गौतमार्षान्नानाछंदस
श्चित्रांबरधराश्चित्राभरणभूषिताश्चित्रगंधानुलेपनान्कृष्णापिंगलध्वजपताकिनोमुकुटकेयूरमणिशोभितानारुह्यरथांदिव्यंमेरुंप्रदक्षिणीकुर्वा
णान्ग्रहमंडलेप्रविष्टानधिदेवताब्रह्मसहितान्प्रत्यधिदेवताचित्रगुप्तसहितान्कृष्णापिंगलध्वजमंडलेदक्षिणामुखान्केतूनावाहयामि॥ स्कां
दे॥ ईश्वरंभास्करेविंद्यादुमांविंद्यान्निशाकरे॥ स्कंदमंगारकेविंद्याद्बुधेनारायणंविदुः॥ गुरौवेदनिधिंविंद्यात्शुक्रेशक्रोविधीयते॥ शनैश्चरेयमं

विंद्याद्राहोकालस्तथैवच॥ चित्रगुप्तोधिपःकेतोरित्येताग्रहदेवताः॥ वेदनिधिर्ब्रह्मा॥ तत्रैव॥ वक्ष्येस्थानानिदेवानामीश्वरादियथाक्रमं॥सूर्यस्यचो
त्तरेशंभुमुमांसोमस्यदक्षिणे॥ स्कंदमंगारकस्यैवदक्षिणास्यांनिवेशयेत्॥ सौम्यात्पश्चिमतोविष्णुंब्रह्माजीवस्यपूर्वतः॥इंद्रमैंद्र्यांसिताद्दिङ्मंदा
दाग्नेयतोयमं॥राहोःपूर्वोत्तरेकालंसर्वभूतभयावहं॥केतोर्नैर्ऋतदिग्भागेचित्रगुप्तंनिधापयेत्॥स्कांदे॥ अतःस्थापनमंत्रांश्चकथयाम्यनुपूर्वशः
॥ईश्वरंत्र्यंबकंचेतिश्रीश्चतेचेतिपार्वतीं॥यदक्रंदेतिचस्कंदंविष्णुंविष्णोरराडसि॥आब्रह्मन्नितिब्रह्माणंसजोषेंद्रेतिवासवं॥यमायत्वेतिचयमं
कालंकार्षिरसीतिच॥चित्रावस्वितिमंत्रेणचित्रगुप्तंनिधापयेत्॥अग्निरापःक्षितिर्विष्णुरिंद्रश्चैंद्रीप्रजापतिः॥सर्पोब्रह्माचनिर्दिष्टा अधिदेवायथा
क्रमं॥अग्निंदूतमितित्वग्नेर्वरुणास्यउदुत्तमम्॥स्योनापृथिवीमेदिन्याइदंविष्णुस्तुविष्णवे॥इंद्रायेंदोइतींद्रस्योत्तानपर्णेशच्चीस्थितौ॥प्रजा
पतेप्रजेशस्यएषब्रह्मेतिवैविधेः॥मंत्रोनमोस्तुसर्पेभ्यःसर्पाणांस्थापनेमतः॥ग्रहदेवाधिदेवानांनैवेद्यंकुसुमानिच॥ग्रहवच्चासनंदानंस्थापनं
चानुपूर्वशः॥सूर्यादयोग्रहाईश्वरादयोदेवाः॥अग्न्यादयोधिदेवाः॥तत्रेश्वरादिदेवानांसूर्यस्यैवोत्तरेशंभुमित्यादिनापूर्वस्थलान्युक्तानि॥अग्न्या
दयोधिदेवास्तुग्रहदेवयोर्मध्येस्थाप्याः॥तथाचमदनरत्नेगोभिलवशिष्ठौ॥ग्रहदेवतयोर्मध्ये अधिदेवान्निधापयेत्॥तत्रैवसंग्रहेतु॥ईश्वराद
योदेषा अधिदेवतात्वेनव्यवहृताः॥अग्न्यादयस्तुप्रत्यधिदेवतात्वेन॥ तेषांस्थानांतरंचोक्तं॥अधिदेवादक्षिणतोवामेप्रत्यधिदेवताः॥स्थाप १२
नीयाःप्रयत्नेनव्याहृतीभिःपृथक्पृथक्॥तत्रैववाशिष्ठीयेतु॥देवतानांस्थानांतरंचोक्तं॥रुद्रंत्र्यंबकमंत्रेणरवेरुत्तरतोन्यसेत्॥सोमस्याग्नेय-

तुतद्भवेदितिपंचवक्रतोक्तिरपिपंचकुंभस्थानापत्यासंगच्छते॥ वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा॥ पंचरत्नंसमादायताम्रपल्लवसंयुतं॥ गजाश्वरथ्यावल्मी
कात्संगमाद्ध्रदगोकुलात्॥ राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत्॥ कुंभस्यनैर्ऋतेदेशेहोमदेशंप्रकल्पयेत्॥ गोमयालेपितेदेशेकुर्यात्स्थंडिलमुत्तमं॥ कृत्वाग्नि
मुखपर्यंतमुल्लेखादिस्वशक्तितः॥ पूर्णपात्रनिधानांतंकृत्वापूजांसमाचरेत्॥ नक्षत्रदेवतारूपंसुवर्णेनप्रयत्नतः॥ निष्कमात्रेणवार्द्धेनपादेनाथस्वशक्तितः॥
प्रतिमांलक्षणोपेतांकारयित्वाविचक्षणः॥ यद्वामूलंसुवर्णस्यस्थापयित्वाप्रपूजयेत्॥ मूलंमूलाकारंमूल्यमितिक्वचित्पाठः॥ तदाप्रतिमामूल्यमित्यर्थः॥
सुवर्णंसर्वदैवत्यंसर्वदेवात्मकोनलः॥ सर्वदेवात्मकोविप्रःसर्वदेवमयोहरिः॥ संस्मरेन्निर्ऋतिंश्यामंसुमुखंनरवाहनं॥ रक्षोधिपंखड्गहस्तंदिव्याभरणभू-
षितं॥ प्रतिमापूजनार्थायवस्त्रयुग्मंप्रकल्पयेत्॥ पंकजंकारयेद्भूमौरक्ताभैर्व्रीहितंडुलैः॥ चतुर्विंशद्दलोपेतंशुभैर्वाकर्णिकान्वितं॥ तस्योपरिन्यसेत्पात्रं
स्वर्णंवारौप्यमृन्मयं॥ शुद्धवस्त्रेणसंच्छाद्यतत्रमूलानिनिक्षिपेत्॥ मूलानिशतमूलानितानिचवक्ष्यते॥ स्वयमुत्पाटयेत्प्राज्ञोमूलानांचशतंपिता॥ मंगल्या
श्चपवित्राश्चओषध्यःकथयाम्यहं॥ लक्ष्मणाशतमूलाचशिरीषोवेतसस्तथा॥ सहाकाश्वेतमूलाचविष्णुक्रांताथशंखिनी॥ सर्पाक्षीमीननेत्राचपुत्रपारीक्ष
तांजली॥ पालाशोबिल्वकश्चैवरोचनाचंदनद्वयं॥ कृष्णामांसीमुरोशीरंबालकंचतथामली॥ गोजिह्वातुलसीईर्ष्याशतपुष्पीसलांगली॥ ब्रह्मदंडीद्रोणपु
ष्पीप्रियंगुःसितसर्षपाः॥ पिप्पलीकाकजंघाचत्रायमाणाहूहूस्तथा॥ ज्योतिष्मतीचगंधारीनिर्गंधापूर्णकोशिका॥ भगक्षमासुभद्राचगुडूचीसेंद्रवारु-
णी॥ अलंबुकारुदंतीचकदलीकेतकीतथा॥ गोक्षुरंशतपर्वाचअरिष्टिकाऽपराजिता॥ छिन्नरुद्धाशतपर्वानिकुंभाचसुवर्चला॥ अश्वगंधाहस्तिकर्णाहरि

द्राह्वितयंतथा॥उष्ट्रवोमधुकारश्चअश्वत्थोबकुलस्तथा॥ सर्पक्षीराद्यपामार्गोमंदारश्चातिमुक्तकः॥ मालतीस्वर्णपुष्पाचश्रीपर्णीश्रीफलंतथा॥दर्भमू
लंकरवीरंमदयंतीविकंकतः॥ पाटलास्करदारुश्चअर्द्धसूदनिकस्तथा॥ फलंमन्मथवृक्षस्यपलाशस्यचपल्लवाः॥ रास्नानदीवृक्षमूलंसुरदारुर्विदारिका
॥श्वेतवीर्याश्वेतपाकानीलोत्पलंतथैवच॥ नागकेशरमिंदीरीकुमारीचैवनिक्षिपेत्॥तीर्थांबुपंचगव्यंचसर्वौषध्यश्चकांचनं॥ यथासंभवतोवापिद्या
द्यंमूलंशतंशुभं॥वीरत्वचासमेतंचशतच्छिद्रेघटेन्यसेत्॥शतमूलाशतावरी॥ वेतसोवंजुलः॥सहकासहदेवी॥ श्वेतमूलापुनर्नवा॥ मीननेत्रामत्स्या
क्षी॥पुत्रपापुत्रजीवा॥कृतांजलीओंजलिनीहाथाहोडाइतिप्रसिद्धा॥बिल्वः॥ चंदनद्वयंश्वेतंपीतंच॥आमलाभूम्यामलकी॥गोजिव्हागजलि-
भीतिप्रसिद्धा॥लांगलीकलिहारीतिप्रसिद्धा॥ब्रह्मदंडीअधःपुष्पी॥करंबुकःकाकजंघाकाकांगीज्योतिष्मतीकंगुका॥गांधारीदेवगांधारी॥पू-
र्णकोशिकाकोशातकी॥ भगाक्षमाशिग्रुः॥सुभद्रासारिवा॥अलंबुकातुंबी॥विशारवपर्वावचा॥ अरिष्टकानागबलाछिन्नरुहापिंडगुडूची॥ शत
पत्राकमलिनी॥ निकुंभादंतीभेदः॥ स्कवर्चलासूर्यभक्ता॥हस्तिकर्णाएरंडः॥उष्ट्रवापीलुः॥मधुकारोमधूकः॥सर्जरावीजकः॥अतिमुक्तकोमा-
धवीमालतीजाती॥ स्वर्णपुष्पाकुशली॥ श्रीफलंबिल्वं॥ मदयंतीयूथिका॥ विकंकतः स्रुववृक्षः॥अर्द्धसूदनिकापालव्या॥मन्मथवृक्षआम्रः॥
स्करदारुर्देवदारुः॥विदारिकाभूकूष्मांडी॥श्वेतवीर्यागिरिकर्णी॥श्वेतपाकागुंजा॥शेषाणिस्पष्टानि॥ विष्णुक्रांतासहदेवीतुलसीतुशतावरी॥
मूलानीमानिगृह्णीयाच्छताऽलाभेविशेषतः॥स्थापयेत्कर्णिकामध्येवस्त्रगंधाद्यलंकृतं॥कूर्मंहेमजलोपेतंकुंकुमौषधिसंयुतं॥कुंभोपरिन्य-

